श्रीहरिः

# अथ लिङ्गपरिचयः

तत्रादौ स्त्रीलिङ्गाधिकारः

ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः। ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात्, तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात्।

अन्यूक्तिन्प्रत्ययान्ताः तल्प्रत्ययान्ताश्च शब्दाः। तथा आबन्ता ङीप्ङीषन्ता ऊङन्ताश्च शब्दाः स्त्रीयामेव बोध्याः। यथा-धनीअवनिः, चमूः, कृतिः, भूतिः, ब्राह्मणता, देवता, रामा, कुमारी, कुण्डोध्नी, कुरूः इत्यादय :।

गो, मणि, यष्टि, मुष्टि, पाटलि, वस्ति, शाल्मलि, त्रुटि, मसि, मरीचि, मृत्यु शीधु, कर्कन्धु, किष्कु, कुढण्डु, रेणु, अशनि, भरणि, अरणि, श्रोणि, योनि, ऊर्मि, तिथि, इषु, इषुधि, बाहु इत्यादयः शब्दा पुंसि स्त्रियां च प्रयुज्यन्ते। 'सुमनस्' शब्दो देवार्थवाचकश्चेन्नित्यपुँल्लिङ्गः, पुष्पार्थ वाचकश्चेत्तदा नपुंसके स्त्रीलिङ्गे चोभयत्र प्रयुज्यते। दुन्दुभिशब्दोऽक्षार्थे स्त्रीलिङ्गोऽन्यत्र पुँल्लिङ्गः। भूमिविद्युत्सरिल्लतावनितापर्यायाः शब्दा अपि स्त्रियामेव भवन्ति। अत्रापवादः यादो नपुंसकम्। दारशब्दः पुमान्।

श्री, विशंति, त्रिंशत्, चत्वारिंशत्,पञ्चाशत्, षष्टि, सप्तति, अशीति, नवति, भास्, स्रुच्, स्रज्, दिश्, उष्णिह्, उपानह्, प्रावृष्, विप्रुष्, रुष्, तृष्, विश्, त्विष्, दर्वि, विदि, वेदि, खनि, शानि, अश्रि, वेशि, कृषि, ओषधि, कटि, अङ्गुलि, नाडि, रुचि, व्रीचि, नालि, धूलि, किकि, केलि, छवि, रात्रि, शष्कुलि, राजि, कुटि, वर्ति, भ्रुकुटि, त्रुटि, वलि, पङ्क्ति, प्रतिपद्, आपद्, विपद्, सम्पद् शरद्, संसद् परिषद्, उषम्, संविद्, क्षुध्, मुद्, समिध्, आशिष्, धुर्, पुर्, गिर्, द्वार्, अप्, त्वच्, वाच्, यवागू, नौ, स्फिच्, सीमन्, याच्ञा-एते शब्दाः लक्ष्मीभूमिग्लानिप्रभृतय ई-मि-नि प्रत्ययान्ताश्च स्त्रीलिङ्गा बोध्याः।

इति स्त्रीलिङ्गाधिकारः।

अथ पुँल्लिङ्गाधिकारः।

घञबन्तः, घाजन्तश्च। घञ्, अप्, घ, अच् इत्येतत्प्रत्ययान्ताः शब्दा पुँल्लिङ्गा भवन्ति, यथा-पाकः त्यागः। करः, गरः,। विस्तरः, गोचरः। चयः, जयः, इत्यादयः। एवमेव नङ्प्रत्ययान्ताः शब्दाः पुँल्लिङ्गा, यथा, यज्ञः, यत्नः, विश्नः, प्रश्नः, इत्यादयः। याच्ञाशब्दस्तु स्त्रियामेव प्रयुज्यते। क्यन्तो घुः। किप्रत्ययान्ता घुसंज्ञकशब्दाः पुंल्लिङ्गा एव भवन्ति, यथा आधिः निधिः, उदधिरित्यादयः। इषुधिस्तु स्त्रियामेव प्रयुज्यते।

देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तभुजकण्ठखड्गशरपङ्का एतत्पर्यायशब्दाश्च पुंस्येव प्रयुज्यन्ते, यथा देवाः सुराः। असुराः दैत्याः। आत्मा क्षेत्रज्ञः स्वर्गो नाकः। गिरिः पर्वतः।

समुद्रोऽब्धिः । नखः कररुहः । केशः शिरोरुहः । दन्तो दशनः । स्तनः कुचः । भुजो बाहुः । कण्ठो गलः (ग्रीवाशब्दस्तु स्त्रियामेव) । खड्गः करवालः शरो मार्गणः । पङ्कः कर्दम : । अत्रापवादाः । त्रिविष्टपत्रिभुवने नपुंसके, द्यौः स्त्रियाम् । इषुबाहू स्त्रियां च वाणकाण्डौ नपुंसके च ।

नकारान्ताः सर्वे पुंल्लिङ्गाः यथा-राजा, तक्षा, युवा इत्यादयः । न च चर्मवर्मादिष्वतिव्याप्तिः मन्द्व्यच्कोऽकर्तरि इति वचनेन तत्र नपुंसकत्वाभिधानात् ।

क्रतुपुरुषकपोलगुल्फमेघशब्दास्तत्पर्यायवाचकाश्च पुंसि भवन्ति । यथा-क्रतुः अध्वरः । [illegible] नरः । पोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः । अत्रापवादः-अभ्रं नपुंसकम् ।

उकारान्ताः शब्दाः पुंसि स्युः । यथा--प्रभुः, इक्षुरित्यादयः । अत्रापवादाः । हनुकरेणुधेनुरज्जुकुहुसरयुतनुरेणुप्रियङ्गुशब्दाःस्त्रियां भवन्ति । तथाश्मश्रुजानुवसुस्वाद्वश्रुजतुत्रपुतालुशब्दा नपुंसके भवन्ति । अत्र वसुशब्दो धनवाची गृह्यते । मद्गुमधुशीधुसीधुसानुकमण्डलुशब्दाः पुन्नपुंसकयोर्भवन्ति ।

'रु' इत्यन्ताः त्वन्ताश्च शब्दाः पुंसि स्युः । यथा-मेरुः, गुरुः, सेतुः, केतुरित्यादयः अथापवादाः । दारुकसेरुजतुवस्तुमस्तुशब्दा नपुंसके भवन्ति । सक्तुशब्दः पुन्नपुंसकयोः ।

कोपधोऽकारान्तः शब्दः पुंसि स्यात् । यथा-स्तबकः कल्कः । अत्रापवादाः-चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके । कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतटाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटक-शण्डकपिटकतालकफलकपुलकानि च पुन्नपुंसकयोः ।

टोपधोऽकारान्तश्च पुंसि स्यात् । यथा- घटः, पटः । अथापवादाः-किरीटमुकुटललाटवटवीटश्रृङ्गाटकराटलोष्टानि नपुंसके भवन्ति । कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानी पुन्नपुंसकयोः ।

णोपधोऽकारान्तः पुंसि स्यात् । यथा-गुणः, गणः, पाषाणः । अथापवादाः-ऋणलवणपर्णतोरणोष्णानि नपुंसके भवन्ति । कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि पुन्नपुंसकयोर्भवन्ति ।

थोपधोऽकारान्तः पुंल्लिङ्गो यथा- रथः, पथः, ग्रन्थः श्रन्थः । अत्रापवादाः-काष्ठपृष्ठसिक्थोक्थानि नपुंसके । दिगर्थकाष्ठाशब्दः स्त्रियाम् । तीर्थयूथप्रोथगाथशब्दाः पुन्नपुंसकयोः । गाथाशब्दः स्त्रियाम् ।

नोपधोऽदन्तः पुंसि भवेत् यथा- इनः, फेनः । अपवादाः-जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्मशानरत्ननिम्नचिह्नानि नपुंसके । मानयानाभिधानमलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमानभवनवसनसम्भावनविभावनविमानानि पुन्नपुंसकयोः ।

पोपधोऽकारान्तः पुंसि स्यात् । यथा-यूपः, दीपः, सर्पः । अत्रपवादाः-पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके । शूर्पकुतपकुणपद्वीपविटपानि पुन्नपुंसकयोः ।

भोपधोऽकारान्तः पुंल्लिङ्गः स्यात् । यथा स्तम्भः, कुम्भ इत्यादयः । अपवादाः-तलभं नपुंसकम् । जृम्भं पुन्नपुंसकयोः ।

मोपधोऽदन्तः पुंसिस्यात् । यथा-सोमः, भीम इत्यादयः । अपवादाः-रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके । संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि पुन्नपुंसकयोः ।

योपधोऽदन्तः पुँल्लिङ्गः । यथा–समयः, हयः । अपवादाः–किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके । गोमयकषायमलयान्वयाव्ययानि पुन्नसंकयोः ।

रोपधोऽकारान्तः पुंसि स्यात् । यथा-क्षुरः, अङ्कुरः । अपवादाः - द्वाराग्रस्फारतक्रवप्रक्षिप्रक्षुद्रनीरतीरदूरकृच्छ्ररन्ध्राश्रस्वभ्रभीरगभीरक्रूरविचित्रकेयूरकेदारोदराजस्र-शरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामरपुष्करगह्वरकुहरकुटीरकुलीरचत्वकाश्मीरनीराम्बर-तन्त्रयन्त्रक्षत्रक्षेत्रमित्रकलचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रवलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रच्छत्राणि नपुंसके भवन्ति । शुक्रशब्दोऽपि देवताभिन्नेऽर्थे क्लीबे प्रयुज्यते । चक्रवज्रान्धकारसाराबारपारक्षीरतोमरश्रङ्गारमन्दारोशीरतिमिरशिशिराणि पुन्नपुंसकयोर्भवन्ति ।

षोपधोऽकारान्तः पुंसि भवेत् । यथा- वृषः वृक्ष इत्यादि । अपवादः - शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके भवन्ति । यूषकरीषिविषवर्षाणि पुन्नपुंसकयोः ।

सोपधोऽकारान्तः पुंसि भवेत् । यथा-वत्सः, वायसः । अपवादाः- पनसबिसबुससाहसानि नपुंसके । चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि पुन्नपुंसकयोः । कंसशब्दोऽप्राणिनि पुन्नपुंसकलिङ्गः । 'कंसोऽस्त्री पानभाजनम्' इति कोषात् । प्राणिनि तु पुँल्लिङ्गः, कंसो नाम राजौग्रसेनिः ।

रश्मिदिवसशब्दौ तत्पर्यायवाचकशब्दाश्च पुंसि स्युः । रश्मिर्मयूखः दिवसो घस्रः । अपवादः- दीधितिः स्त्रियाम् । दिनाहनी नपुंसके ।

परिमाणवाचकशब्दाः पुंसि भवेयुः । कुडवः, प्रस्थः । अपवादः- द्रोणकाकौ नपुंसके पुँल्लिङ्गे च । खारीमानिके स्त्रियाम् ।

दाराक्षतलाजासूनां बहुवचान्तत्वं पुंस्त्वं च ।

मरुत्, गरुत्, तरत्, ऋत्विक्, ऋषि, राशि, दृति, ग्रन्थि, कृमि, ध्वनि, वलि, कौलि, मौलि, रवि, कवि, कपि, मुनि, ध्वज, गज, मुञ्ज, पुञ्ज, हस्त, कुन्त, अन्त, व्रात, वात, दूत धूर्त, सूत, चूत, मुहूर्त, षण्ड, मण्ड, करण्ड, भरण्ड, वरण्ड, तुण्ड, गण्ड, मुण्ड, पाषण्ड, शिखण्ड, वंश, अंश, पुरोडाश, ह्रद, कन्द, कुन्द, बुद्बुद, शब्द, अर्घ, पथिन्, मथिन्, ऋभुक्षिन्, स्तम्ब, नितम्ब, पूग, पल्लव, पल्वल, कफ, रेफ, कटाह, निर्व्यूह, मठ, मणि, तरङ्ग, तुरङ्ग, गन्ध, स्कन्ध, मृदङ्ग, सङ्ग, समुद्र, पुङ्ख, सारथि, अतिथि, कुक्षि, बस्ति, पाणि, अञ्जलि-एते शब्दाः पुँल्लिङ्गे भवन्ति । अत्रत्याः कतिपये शब्दा नपुंसकेऽपि ।

इतिपुँल्लिङ्गाधिकारः ।

अथ नपुंसकलिङ्गाधिकारः

भावल्युडन्ता भावनिष्ठान्तास्तद्धितत्वष्य्प्रत्ययान्ता भावकर्मनिमित्तकयत्-य-ढक्-यक्-अञ्अण्-वुञ्-छप्रत्ययान्ताश्च शब्दाः क्लीबे भवन्ति । दिङ्मात्रमुदाहरणं क्रमेण यथा-हसनम्, शयितम् शुक्लत्वम्, शौक्लचम्, स्तेयम्, सख्यम्, कापेयम्, आधिपत्यम्, औष्ट्रम्, द्वैहायनम्, पितापुत्रकम्, अच्छावाकीयम् ।

अव्ययीभावो नपुसकं स्यात् । अधिस्त्रि, उपकुम्भम् । एकद्भाववन्तो, द्वन्द्वाः क्लीबे बोध्याः । पाणिपादम् ।

राजपर्यायपूर्वोऽमनुष्यपूर्वश्च सभान्तस्तत्पुरुषो नपुंसकं स्यात् । इनसभम्, ईश्वरसभम्, इन्द्रसभम् इत्यादि । अमनुष्यशब्दो रूढ्या रक्षः पर्यायो बोध्यः । रक्षः सभम्, पिशाचसभमित्यादि ।

पर्यायस्यैवेष्यते, तेनेह न राजसभा, चन्द्रगुप्तसभा। सुरासेनाच्छायाशालानिशान्तस्तत्पुरुषः स्त्रियां नपुंसके च भवति। अपथपुण्याहशब्दौ संख्यापूर्वा रात्रिश्च नपुंसके भवन्ति। द्विगुरपि स्त्रियां नपुंसके च भवति। यथा-पञ्चमूली, त्रिभुवनम्।

इसन्ता उसन्ताश्च शब्दाः क्लीबे प्रयुज्यन्ते। हविः, धनुः। अत्रापवादः- अर्चिः स्त्रियां नपुंसके च भवति। छदिस्तु स्त्रियामेव।

मुखनयनलोहवनमांसरुधिकार्मुकविवरजलहलधनान्नशब्दास्तत्पर्यायवाचिनश्च नपुंसके भवन्ति। यथा-मुखमाननम्। नयनं लोचनम्। लोहं कालम्। वनं गहनम्। मांसम् आभिषम्। रुधिरं रक्तम्। कार्मुकं शरासनम्। विवरं बिलम्। जलं वारि। हलं लाङ्गलम्। धनं द्रविणम्। अन्नमशनम्। अत्रापवादाः-सीरः, अर्थः, ओदनः-एते पुंल्लिङ्गाः। वक्त्रनेत्रारण्यगाण्डीवशब्दाः पुन्नपुंसकयोः। अटवी स्त्रियाम्।

लोपधोऽकारान्तः क्लीबे स्यात्। कुलं कूलं, स्थलमित्यादि। अपवादाः - तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि भवन्ति। शीलमूलमङ्गलशालकमलतलमुसलकुण्डल-लपलमृणालबालनिगलपलालविडालखिलशूलाः पुन्नपुंसकयोः।

शतादिः संख्या क्लीबम्। शतं, सहस्रम् इत्यादि। अपवादाः-शतायुतप्रयुताः पुन्नपुंसकयोः। अत्र शतशब्दोऽनन्तवाची। लक्षा कोटिः स्त्रियाम्। कोशप्रमाणाल्लक्षशब्दो नपुंसकेऽपि। मन्प्रत्ययान्ता द्व्यच्काः शब्दाः क्लीबे स्युर्न तु कर्तरि यथा चर्म, वर्म। द्व्यच्काः किम. ? अणिमा। अत्रापवादः-ब्रह्मशब्दः पुन्नपुंसकयोः। असन्तो द्व्यच्कः क्लीबे भवति। यज्ञः, मनः, तपः,। द्व्यच्कः किम् ? चन्द्रमाः। अपवादः- अप्सराः स्त्रियाम्, प्रायेणायं बहुवचनान्तः।

त्रान्तशब्दो नपुंसकं भवति। यथा- पत्रं, छत्रमित्यादि। अपवादाः-यात्रामात्राभस्त्रादंष्ट्रावरत्राशब्दाः स्त्रियामेव। भृत्रामित्रच्छात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंस्येव। पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि नपुंसके च भवन्ति।

बलकुसुमशुल्वपत्तनरणशब्दास्तत्पर्यायवाचकाश्च क्लीबे भवन्ति। बलं वीर्यम्। कुसुमं पुष्पम्। शुल्वं ताम्रम्। पत्तनं नगरम्। रणं युद्धम्। अत्रापवादाः-पद्मकमलोत्पलानि पुन्नपुंसकयोः। आहवसंग्रामौ पुंसि। आजिः स्त्रियामेव।

फलजातिवाची शब्दो नपुंसकं स्यात्। आमलकम्, आम्रम्, वियत्, जगत्, शकृत्, पृषत्, उदश्वित्, नवनीत, अवतान, अनृत, अमृत, निमित्त, वित्त, चित्त, पित्त, व्रत, रजत, वृत्त, पलित, श्राद्ध, कुलिश, दैव, पीठ, कुण्ड, अङ्ग, अङ्क, दधि, सक्थि, अक्षि, आस्य, आस्पद, कण्व, बीज, धान्य, आज्य, शस्य, रूप्य, पण्य, वण्य, हव्य, कव्य, काव्य, सत्य, अपत्य, मूल्य, शिक्य, कुड्य, मद्य, हर्म्य, तुर्य सैन्य, द्वन्द्व, वर्ह, दुःख, बडिश, पिच्छ, विम्ब, कुटुम्ब, कवच, वर, शर, वृन्दारक, अक्ष-एते शब्दा नपुंसके भवन्ति। अक्षशब्दोऽत्रेन्द्रियवाची गृह्यते।

घृत, भूत, मुस्त, क्ष्वेलित, ऐरावत, पुस्तक, बुस्त, लोहित, श्रृङ्ग, अर्घ, निदाघ, उद्यम, शल्य, दृढ, व्रज, कुञ्ज, कुथ, कुथ, कूर्च, प्रस्थ, दर्प, अर्भ अर्धर्च, दर्भ, पुच्छ, कबन्ध, औषध, आयुध, दण्ड, मण्ड, खण्ड, शव, सैन्धव, पार्श्व, आकाश, कुश, काश, अङ्कुश, कुलिश, गृह, मेह, देह, पट्ट, पटह, अष्टापद, अम्बुद, ककुद-एते शब्दाः, पुन्नपुंसकयोर्भवन्ति।

इति नपुंसकलिङ्गाधिकारः।

# सन्दर्भग्रन्थ-सूची


१. *अमरकोश :* अमरसिंहविरचित: । भानुजिदीक्षितकृतव्यारव्यासुधाव्याख्या सहित: । हरगोविन्द शास्त्रिाणा स्वरचित हिन्दीटीकया टिप्पण्या च सह संपादित:
चौखम्मा संस्कृतसंस्थानत: २०३९ वैक्रमाब्दे प्रकाशित: ।

२. *काशिकावृत्ति:* वामनजयादित्यविरचिता । प्रथमभाग: संस्कृतपरिषत् उस्मानिया विश्वविद्यालय हैदरावादत: प्रकाशित: ई.सं. १९६९

३. *काशिका वृत्ति:* वामनजयादित्यविरचिता । द्वितीयभाग: संस्कृतपरिषत् उस्मानिया विश्वविद्यालय हैदरावादत: प्रकाशित: ई.सं. १९६९

४. *पातञ्जलमहाभाष्यम्:* महर्षि पतञ्जलिरचितम् । प्रदीपोद्योतोद्भासितम् भार्गवशास्त्रिकृत टिप्पण्यादिसहितम् । मुम्बय्यां निर्णयसागर मुद्रणालयत: समुद्र्य प्रकाशितम् । पञ्चमं संस्करणम् ई.सं. १९५१

५. *माधवीय धातुवृत्ति:* सायाणमाधवाचार्यरचिता। भारद्वाजदामोदरशास्त्रिणा संपादिता काश्यां मेडिकल हल् नामक यन्त्रालये संमुद्रय १९५४ वैक्रमाब्दे प्रकाशिता

६. *मेदिनीकोश:* मेदिनिकरनिर्मित: । जगन्नाथशास्त्रिहोशिङ्गसंपादित: । चौखम्बा संस्कृतसिरीज वाराणसीत: १९६८ वैक्रमान्दे प्रकाशित: ।

७. *लघुसिद्धान्तकौमुदी* वरदराजाचार्यविरचिता । रामदत्तपाण्डेयरचितटिप्पणयादिना सहिता गीताप्रेस गोरखपुरत: प्रकाशिता । चतुर्विंशंतितमं संस्करणम् ।

८. *लघुसिद्धान्तकौमुदी* वरदराजाचार्यविरचिता । श्रीधरानन्द शास्त्रिकृत प्राज्ञतोषिणी व्याख्यासहिता नरेन्द्रप्रकाशजैन मोतीलाल वनारसीदास दिल्ली ७ द्वारा प्रकाशिता । अष्टमसंस्करणम् ई.सं. १९७७ ।

९. *लघुसिद्धान्तकौमुदी* वरदराजाचार्यविरचिता । चन्द्रधर भवानीशङ्करकृतया नेपाली व्याख्यायासहिता ज्योतिषप्रकाशनाम्रिमुद्रणलये वाराणस्यां सम्मुद्रय वि.सं. १९९२ वैक्रमाब्दे प्रकाशिता ।

१०. *वैयाकरण भूषणसार:* कौण्डभट्ट विरचित: । नेपालशास्त्री नेनेकृत व्याख्यया रामप्रसाद त्रिपाठि टिप्पण्या च सहिता चौरवम्बा अमरभारती प्रकाशनत: प्रकाशिता पञ्चमसंस्करण ई. १९८१ ।

११. *वैयाकरणसिद्धान्तकौमुदी* भट्टोजिदीक्षितविरचिता। वासुदेव दीक्षितविरचिताबालमनोरमा व्याख्याया ज्ञानेन्द्रसरस्वती विरचित तत्वबोधिनीव्याख्यया च सहिता महामहोपाध्यायगिरिधरशर्म चतुर्वेदि- महामहोपाध्यायपरमेश्वर ानन्दशर्मभ्यां सम्पादिता नरेन्द्रप्रकाश जैन मोतीलाल वनारसीदास वेङ्गलोरोड जवाहरनगर दिल्ली ७ द्वारा प्रकाशित ।
श्रीमद्भागवतम्, श्रीमद्भगवद्गीता, माघकाव्यम्, मैषधीमचरितम् इत्यादि ग्रन्थाश्च ।